देशे देशे शूकधान्येषु संख्या
ज्ञातुं शक्या नैव तैर्द्दैवतैर्व्वा ।
अस्माद्देशे येषु भोगोपभोगा-
स्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥
शालयः कलमा वन्या व्रीहिश्रेष्ठा नृपप्रियाः ।
धान्योत्तमाश्च विज्ञेयाः केदाराः सुकुमारकाः ॥
राजान्नषष्टिकसितेतररक्तसुख-
स्थूलाशुगन्धतिरियादिकशालिसंज्ञाः ।
व्रीहिस्तथेति दशधा भुवि शायनाः स्यु-
स्तेषां क्रमेण गुणनामगणं ब्रवीमि ॥
व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः
स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च ।
पुष्टिं दत्ते श्रमशमनकृद्वीर्य्यवृद्धिं विधत्ते
रुच्योऽत्यन्तं जनयति सुदं वातकृन्मेचकोऽन्यः ॥"
इति राजनिर्घण्टः ॥

अपि च ।
"वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिर-
पाकिनः ।
कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि ॥
शालमुखो जतुमुख इत्याद्या व्रीहयः स्मृताः ।
कृष्णव्रीहिः स विज्ञेयो यत्कृष्णतुषतण्डुलाः ॥
पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते ।
कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते ॥
शालमुखः कृष्णशूकः कृष्णतण्डुल उच्यते ।
लाक्षावर्णमुखं तस्य ज्ञेयो जतुमुखस्तु सः ॥
व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः ।
अल्पाभिष्यन्दिनो बद्धवर्च्चस्काः षष्टिकैः समाः ॥
कृष्णव्रीहिर्व्वरस्तेषां तस्मादल्पगुणाः परे ॥"
इति भावप्रकाशः ॥

तस्य यज्ञीयत्वं यथा,—
"यज्ञार्थं तनु भूतानां भक्ष्यमित्येव वै श्रुतिः ।
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च ॥
एते पञ्च महायज्ञा ब्रह्मणा निर्म्मिताः पुरा ।
ब्राह्मणानां हितार्थाय इतरेषां च तनुसुखाः ॥
इतरेषां तु वर्णानां ब्राह्मणैः कारिताः शुभाः ।
एवं कृत्वा नरो मुक्ताकाङ्क्षरित्रि ! विशुध्यति ॥
अन्यथा व्रीहयोऽप्येते एकैके मृगपाक्षिणः ।
मन्त्रया दाह्मभोक्तॄणां महामांसं तु तत्
स्मृतम् ॥"
इति वाराहे आदिकृतवृत्तान्ताध्यायः ॥
तेन पितृतृप्तिर्यथा । मनुः ।
"तिलैर्व्रीहियवैर्माषैरद्भिर्म्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥"
व्रीहिः शरत्पक्वधान्यम् । याज्ञवल्क्यः ।
"हविष्यान्नेन वै मासं पायसेन च वत्सरम् ।
मात्स्यहारिणकौरभ्रशाकुनिच्छागपार्षतैः ॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम् ।
मासवृद्ध्याभितृप्यन्ति दत्तेनेह पितामहाः ॥"
हविष्यान्नेन शालिव्रीह्यन्नेन । इति । अमा-
वास्यास्तिस्रोऽष्टका माघी प्रौष्ठपद्यूर्द्धं कृष्णत्रयो-
दशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजा-
पतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥"
इति विष्णुवचनं नवान्नागमश्राद्धस्यैव व्रीहि-
यवोभयप्राप्तिविषयकत्वेन विधायकं ग्रैष्मादि-
धान्यव्युदासाय । शालिधान्यस्य तु प्राप्तिः ।
"शरद्वसन्तयोः केचित् नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"
इति छन्दोगपरिशिष्टे व्रीह्यप्राप्त्या नवशस्येऽष्टौ-
शालिविधानात् यज्ञतुल्यन्यायात् श्राद्धेऽपि तथा
कल्पनात् । इति च श्राद्धतत्त्वम् ॥ * ॥ नवान्न-
श्राद्धकालो यथा । विष्णुः । अमावस्यास्तिस्रो-
ऽष्टकास्तिस्रोऽन्वष्टका माघी प्रौष्ठपद्यूर्द्धं कृष्ण-
त्रयोदशी व्रीहियवपाकौ च ।
"एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तावाद्यौ महाराज विना श्राद्धं कथञ्चन ॥"
इति मलमासतत्त्वम् ॥
तेन यागकरणं यथा,—
व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते ॥ तत्र
"व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः ।
अप्रतीतयवाप्रामाण्यकल्पनम् ।" इत्येकादशी-
तत्त्वम् ॥ * ॥ व्रीह्यप्राप्तौ शालिधान्येन कर्म्म-
करणं यथा,—
"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥"
इति तिथ्यादितत्त्वम् ॥
व्रीहिकः, त्रि, (व्रीहिरस्यास्तीति । व्रीहि+
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ । इति ठन् ।)
धान्यविशिष्टः । इति सिद्धान्तकौमुदी ॥
व्रीहिकाञ्चनः, पुं, ( व्रीहिः काञ्चनमिव । अभि-
धानात् पुंस्त्वम् ।) मसूरः । इति त्रिकाण्डशेषः ॥
व्रीहिपर्णी, स्त्री, ( व्रीहेः पर्णमिव पर्णमस्याः ।
ङीष् । ) शालपर्णी । इति राजनिर्घण्टः ॥
व्रीहिभेदः, पुं, ( व्रीहेर्भेदः । ) धान्यविशेषः ।
चिना इति ख्यातः । तत्पर्य्यायः । अणुः २ ।
इत्यमरः ॥
व्रीहिमयः, पुं, (व्रीहेः पुरोडाशः । व्रीहि+"व्रीहेः
पुरोडाशे ।" ४ । ३ । १४८ । इति मयट् । )
व्रीहिनिर्म्मितपुरोडाशः । इति सिद्धान्तकौमुदी ॥
( व्रीह्यात्मके, त्रि । यथा, महाभरते । १३ ।
११५ । ५६ ।
"श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त यज्वानः पुण्यलोकपरायणाः ॥")
व्रीहिराजकः, पुं, (व्रीहीणां राजा । टच् समासे ।
ततः कन् । ) कङ्गुधान्यम् । चीनकधान्यम् ।
इति मेदिनी ॥
व्रीहिश्रेष्ठः, पुं, ( व्रीहिषु श्रेष्ठः ) शालिधान्यम् ।
इति राजनिर्घण्टः ॥
व्रीही, [ न् ] त्रि, (व्रीहिरस्यास्तीति । व्रीहि+
"व्रीह्यादिभ्यश्च ।" ५ । २ । ११६ इति इनिः ।)
व्रीहियुक्तक्षेत्रादि । इति सिद्धान्तकौमुदी ॥
व्रीह्यगारं, क्ली, (व्रीहीणामगारम् ।) धान्यगृहम् ।
तत्पर्य्यायः । कुसूलः २ । इति त्रिकाण्डशेषः ॥
व्रुड, शि संवृतिसंहत्योः । मज्जे । इति कविकल्प-
द्रुमः ॥ (तुदा०-कुटा०-पर०-सक०-अकश्च-सेट् ।)
रेफयुक्तः । शि, व्रुडति अव्रुडीत् वुव्रोड ।
मज्जो मज्जनम् । इति दुर्गादासः ॥
व्रूस, कि वधे । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे
भ्वा०-सक०-सेट् । ) रेफयुक्तो दीर्घो । कि,
व्रूसयति व्रूसति । इति दुर्गादासः ॥
व्रैहः, त्रि, ( व्रीहेरवयवो विकारो वा । व्रीहि+
"बिल्वादिभ्योऽण् ।" ४ । ३ । १३६ । इत्यण् ।)
व्रीहिनिर्म्मितः । इति सिद्धान्तकौमुदी ॥
व्रैहेयः, त्रि, ( व्रीहीणां भवनं क्षेत्रम् । व्रीहि+
"व्रीहिशाल्योर्ढक् ।" ५ । २ । २ । इति ढक् ।)
आशुधान्योपयुक्तभूम्यादिः । इत्यमरः ॥
व्ली, श, शि गतिवृत्योः । इति कविकल्पद्रुमः ॥
( क्र्या०-प्या०-पर०-सक०-अनिट् ।) अन्तःस्थ-
तृतीयोपधः । शि, व्लिनाति । व्लीनः व्लीनिः ।
इति दुर्गादासः ॥